श्रीः ।

# अष्टादशस्मृतयः ।

ताश्च

[१ अत्रिस्मृतिः, २ विष्णुस्मृतिः, ३ हारीतस्मृतिः, ४ औशन स्मृतिः, ५ आङ्गिरसस्मृतिः, ६ यमस्मृतिः, ७ आपस्तम्ब... ८ संवर्त्तस्मृतिः, ९ कात्यायनस्मृतिः, १० ...तिस्मृतिः, ११ पाराशरस्मृतिः, १२ व्यासस्मृतिः, ...३ शंखस्मृतिः, १४ लिखितस्मृतिः, १५ दक्षस्मृतिः, १६ ...मस्मृतिः, १७ शातातपस्मृतिः, १८ वसिष्ठस्मृतिः ]

सोऽयं ग्रन्थः

मुम्बय्यां

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम् यंत्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९८१, शके १८४६

# भूमिका ।

श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ।
काणः स्यादेकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥

इह हि परिवर्तिनि संसारेऽजस्रमेव शरीरिणाञ्जननिधने जायेते । कर्मानुगो हि जीवः स्वसुखदुःखयोः परवानपि धर्मैकप्रवणः प्रभवति स्वाभ्युदयायेति निर्विवादम् ।

यद्यपि जन्मिमात्रः स्वस्वधर्मानुरूपमधिकारी धर्माचरणे तथा ८
धर्मशास्त्राध्ययने तद्विहितधर्मानुष्ठाने च द्विजातिरेवाधिक्रियते । ९
योगीश्वरैः निषेकादिः श्मशानान्तो मन्त्रैर्यस्य ... ... १०
शास्त्रेऽधिकारोऽस्मिन्सम्यङ् नान्यस्य कस्यचित् ॥" इति । रूपणम् १२

उपनयनानन्तरमेव हि ब्रह्मचर्याश्रमे गायत्रीजपाग्निगुरुशुश्रूषाश्रुतपरिशीलनादिब्रह्मचारिनियमाः, गृहस्थाद्याश्रमनियमाश्च ऋते धर्मशास्त्रान्न विज्ञायन्ते । प्राधान्यतश्चात्र धर्मशब्दः षड्विधधर्मपरः । स च-वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति । "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥" इत्यादिश्रीभगवद्वचोऽनुरोधाद्द्विजातिभिस्तु इतरैरपि यथाशक्ति स्वस्वधर्मानुष्ठानं विधेयमेव, अतएव परमकृपाकूपार महर्षिमन्वादिभिर्वर्णाश्रमधर्मबोधनाय स्वस्वनाम्ना धर्मशास्त्राणि निरमीयन्त, यतश्च किलातिपावनेऽस्मिन्भारते वर्षे द्विजत्व-

सम्पत्तिप्राप्तिदिवसादेवावहिता आचार्याः स्वस्ववटून्धर्मपटून्विधातुं धर्मशास्त्रानुसारं समादिशन ।

तेषामाह्निककृत्ये धर्मशास्त्रानुकूलमेव कर्मणां सन्निवेशान्स्वतो हि जागरूकता धर्मशास्त्रस्यासीत् । साम्प्रतं तु कलिमहिम्ना सुदूरमपास्ता सा द्विजानां दैनिकी क्रिया, तत एव दुर्दैवाद्विजा धर्मशास्त्रपरिशीलने मन्दोत्साहाः समभवन् ।

मा चैव धर्मशास्त्रावहेलनं भवेद्विजाश्च भूयोऽपि धर्मशास्त्राध्ययनाध्यापनादिना स्ववर्णाश्रमाचारं पालयन्तूपदिशन्तु च तदधिकारिण इति [illegible] लयतो दशिष्टाद्यष्टादशस्मृतिग्रन्थमेनं विक्रेतुमुद्युक्तोऽहं प्रेक्षे [illegible]यामि सर्व एव धार्मिका द्विजादयोऽमूल्यमेनं ग्रन्थं समुपलभ्य [illegible]र्णप्रायं धर्मं गोपायन्तु समुद्धरन्तु च सुकृतमसूं सपस्विनीमिमां [illegible]तभुवमिति ।

श्रीकृष्णदासात्मजः

क्षेमराजो मुम्बईस्थः

"श्रीवेंकटेश्वर" स्टीम् यन्त्रालयाधिपतिः ।

श्रीः ।

# अथाष्टादशस्मृति विषयानुक्रमणिका ।

| विषयाः । | पृष्ठांकाः । |
|---|---|

## अत्रिस्मृतिः १.

| विषयाः । | पृष्ठांकाः । |
|---|---|


## विष्णुस्मृतिः २.

### अध्यायः १.

विषयाः । पृष्ठांकाः ।

## अष्टादशस्मृति विषयानुक्रमणिका ।

श्रीः ।

# अष्टादशस्मृतयः ।

श्रीयोगिजनवल्लभाय नमः ।

## अथ अत्रिस्मृतिः १.

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् ॥
सर्वशास्त्रविधिज्ञं तमृषिभिश्च नमस्कृतम् ॥ १ ॥
नमस्कृत्य च ते सर्व इदं वचनमब्रुवन् ॥
हितार्थं सर्वलोकानां भगवन्कथयस्व नः ॥ २ ॥

अत्रिरुवाच ॥

वेदशास्त्रार्थतत्त्वज्ञा यन्मे पृच्छथ संशयम् ॥
तत्सर्वं संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३ ॥
सर्वतीर्थान्युपस्पृश्य सर्वान्देवान्प्रणम्य च ॥
जप्त्वा तु सर्वसूक्तानि सर्वशास्त्रानुसारतः ॥ ४ ॥
सर्वपापहरं दिव्यं सर्वसंशयनाशनम् ॥
चतुर्णामपि वर्णानामत्रिः शास्त्रमकल्पयत् ॥ ५ ॥
ये च पापकृतो लोके ये चान्ये धर्मदूषकाः ॥

---

१ अथात्रिस्मृत्युपक्रमः ।

सर्वपापैः प्रमुच्यंते श्रुत्वेदं शास्त्रमुत्तमम् ॥ ६ ॥
तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः ॥
शिष्येभ्यश्च प्रवक्तव्यं सद्वृत्तेभ्यश्च धर्मतः ॥ ७ ॥
अकुलीने ह्यसद्वृत्ते जडे शूद्रे शठे द्विजे ॥
एतेष्वेव न दातव्यमिदं शास्त्रं द्विजोत्तमैः ॥ ८ ॥
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा ह्यनृणी भवेत् ॥ ९ ॥
एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते ॥
शुनां योनिशतं गत्वा चाण्डालेष्वभिजायते ॥ १० ॥
वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते ॥
स सद्यः पशुतां याति संभवानेकविंशतिम् ॥ ११ ॥
स्वानि कर्माणि कुर्वाणा दूरे संतोऽपि मानवाः ॥
प्रिया भवंति लोकस्य स्वे स्वे कर्मण्युपस्थिताः ॥ १२ ॥
कर्म विप्रस्य यजनं दानमध्ययनं तपः ॥
प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः ॥ १३ ॥
क्षत्रियस्यापि यजनं दानमध्ययनं तपः ॥
शस्त्रोपजीवनं भूतरक्षणं चेति वृत्तयः ॥ १४ ॥
दानमध्ययनं वार्ता यजनं चेति वै विशः ॥
शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च ॥ १५ ॥

तदेतत्कर्माभिहितं संस्थिता यत्र वर्णिनः ॥
बहुमानमिह प्राप्य प्रयांति परमां गतिम् ॥ १६ ॥
ये व्यपेताः स्वधर्माच्च परधर्मेष्ववस्थिताः ॥
तेषां शास्तिकरो[1] राजा स्वर्गलोके महीयते ॥ १७ ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ॥
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥ १८ ॥
वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः ॥
यतो राष्ट्रस्य हंतासौ यथा वह्नेश्च वै जलम् ॥ १९ ॥
प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः ॥
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम् ॥ २० ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ॥
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥ २१ ॥
अव्रताश्चानधीयाना यत्र भैक्ष्यचरा द्विजाः ॥
तं ग्रामं दंडयेद्राजा चोरभक्तददंडवत् ॥ २२ ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु[2] भुंजते ॥
तेष्वनावृष्टिमिच्छंति महद्वा जायते भयम् ॥ २३ ॥
ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान् ॥
तत्र वर्षति पर्जन्यो यत्रैतान्पूजयेन्नृपः ॥ २४ ॥
त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः ॥

---

१ शास्तिः शासनम् । २ तेषु राष्ट्रेषु ।

[illegible] रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥ २५ ॥

[illegible] देशे दुष्कालाय नीतं कुर्वंति ते द्विजाः ॥

दिव्यवर्षसहस्राणि स्वर्गलोके महीयते ॥ २६ ॥

य एवं कुरुते राजा गुणदोषपरीक्षणम् ॥

स याति स्वर्गं नृपत्वं च पुनः कोशं च सोऽर्जयेत् ॥ २७ ॥

दुष्टस्य दंडः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ॥

अपक्षपातोऽर्थिषु राष्ट्ररक्षा पंचैव यज्ञाः कथिता नृपाणाम् ॥ २८ ॥

प्रजापालने पुण्यं प्राप्नुवंतीह पार्थिवाः ॥

न तु क्रतुसहस्रेण प्राप्नुवंति द्विजोत्तमाः ॥ २९ ॥

अलाभे देवखातानां ह्रदेषु सरसीषु च ॥

उद्धृत्य चतुरः पिंडान्पारक्ये स्नानमाचरेत् ॥ ३० ॥

वसा शुक्रमसृङ्मज्जा मूत्रं विट् कर्णविण्नखाः ॥

श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ३१ ॥

षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः ॥

मृद्वारिभिश्च पूर्वेषामुत्तरेषां तु वारिणा ॥ ३२ ॥

शौचमंगलमायासा अनसूयाऽस्पृहा दमः ॥

लक्षणानि च विप्रस्य तथा दानं दयापि च ॥ ३३ ॥

---

१ [illegible] पाठेषु इति शेषः । २ स राजा इति शेषः । ३ परकीये जलस्थाने ।

अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिंदितैः ॥
आचारेषु व्यवस्थानं शौचमित्यभिधीयते ॥ ३४ ॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ॥
एतद्धि मंगलं प्रोक्तमृषिभिर्धर्मवादिभिः ॥ ३५ ॥
शरीरं पीड्यते येन शुभेन ह्यशुभेन वा ॥
अत्यंतं तन्न कुर्वीत अनायासः स उच्यते ॥ ३६
न गुणान्गुणिनो हंति स्तौति चान्यान्गुणानपि ॥
न हसेच्चान्यदोषांश्च साऽनसूया प्रकीर्तिता ॥ ३७ ॥
यथोत्पन्नेन कर्तव्यः संतोषः सर्ववस्तुषु ॥
न स्पृहेत्परदारेषु साऽस्पृहा च प्रकीर्तिता ॥ ३८ ॥
बाह्य आध्यात्मिके वापि दुःख उत्पादिते परैः ॥
न कुप्यति न चाहंति दम इत्यभिधीयते ॥ ३९ ॥
अहन्यहनि दातव्यमदीनेनांतरात्मना ॥
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥ ४० ॥
परस्मिन्बंधुवर्गे वा मित्रे द्वेष्ये रिपौ तथा ॥
आत्मवद्वर्तितव्यं हि दयैषा परिकीर्तिता ॥ ४१ ॥
यश्चैतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः ॥
स गच्छति परं स्थानं जायते नेह वै पुनः ॥ ४२ ॥
इष्टापूर्ते च कर्तव्यं ब्राह्मणेनैव यत्नतः ॥
इष्टेन लभते स्वर्गं पूर्ते मोक्षो विधीयते ॥ ४३ ॥

अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ॥
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ ४४ ॥
वापीकूपतडागादिदेवतायतनानि च ॥
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ ४५ ॥
इष्टापूर्ते द्विजातीनां सामान्ये धर्मसाधने ॥
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ॥ ४६ ॥
यमान्सेवेत सततं न नित्यं नियमान्बुधः ॥
यमात्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥ ४७ ॥
आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम् ॥
प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥ ४८
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहौ ॥
व्रतमौनोपवासं च स्नानं च नियमा दश ॥ ४९ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ॥
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥
यद्युद्दिश्य तिसृञ्जेत अष्टभागं लभेत सः ॥ ५० ॥
मातरं पितरं वापि भ्रातरं सुहृदं गुरुम् ॥
यद्युद्दिश्य निमज्जेत द्वादशांशफलं भवेत् ॥ ५१ ॥
अनुत्पन्नोऽपि वर्णस्थः पुत्रमतिनिधिः सदा ॥
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ ५२ ॥
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

१ अतुपदं वक्ष्यमाणमात्राधातीरिक्तम् । २ निमज्जनं कारयेत् ।

ऋणमस्मिन्संनयति अमृतत्वं च गच्छति ॥ ५३ ॥
जातमात्रेण पुत्रेण पितॄणामनृणी पिता ॥
तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः ॥ ५४ ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजते चाश्वमेधं च नीलं वा वृषमुत्सृजेत् ॥ ५५ ॥
कांक्षंति पितरः सर्वे नरकांतरभीरवः ॥
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ ५६ ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥
गयशीर्षं पदाक्रम्य मुच्यते ब्रह्महत्यया ॥ ५७ ॥
महानदीमुपस्पृश्य तर्पयेत्पितृदेवताः ॥
अक्षयाँल्लभते लोकान्कुलं चैव समुद्धरेत् ॥ ५८ ॥
शंकास्थाने समुत्पन्ने भक्ष्यभोज्यविवर्जिते ॥
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥ ५९ ॥
अक्षारलवणं रौक्षं पिबेद्ब्राह्मीं सुवर्चलाम् ॥
त्रिरात्रं शंखपुष्पीं वा ब्राह्मणः पयसा सह ॥ ६० ॥
मद्यभांडे द्विजः कश्चिदज्ञानात्पिबते जलम् ॥
प्रायश्चित्तं कथं तस्य मुच्यते केन कर्मणा[२] ॥ ६१ ॥
पालाशबिल्वपत्राणि कुशान्पद्मान्युदुंबरम् ॥
क्वाथयित्वा पिबेदापस्त्रिरात्रेणैव शुद्ध्यति ॥ ६२ ॥

---

१ गंगाम्। २ इति विप्रतिपत्तौ सत्यामिति श्लोकांतशेषः।

सायं प्रातस्तु यः संध्यां प्रमादाद्विक्रमेत्सकृत्[1] ॥
गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितः ॥ ६३ ॥
शोकाक्रांतोऽथवाऽऽक्रान्तात् स्थितः स्नानजपाद्बहिः ॥
ब्रह्मकूर्चं[2] चरेद्दत्वा, दानं दत्त्वा विशुद्ध्यति ॥ ६४ ॥
गवां शृंगोदके स्नात्वा महानद्युपसंगमे ॥
समुद्रदर्शने चापि व्यालदष्टः शुचिर्भवेत् ॥ ६५ ॥
वृकश्वानशृगालैस्तु यदि दष्टस्तु ब्राह्मणः ॥
हिरण्योदकसंमिश्रं घृतं प्राश्य विशुद्ध्यति ॥ ६६ ॥
ब्राह्मणी तु शुना दष्टा जंबुकेन वृकेण वा ॥
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ६७ ॥
सव्रतस्तु शुना दष्टस्त्रिरात्रमुपवासयेत् ॥
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ ६८ ॥
मोहात्प्रमादात्संलोभाद्व्रतभंगं तु कारयेत् ॥
त्रिरात्रेणैव शुद्ध्येत पुनरेव व्रती भवेत् ॥ ६९ ॥
ब्राह्मणानां यदुच्छिष्टमश्नात्यज्ञानतो द्विजः ॥
दिनद्वयं तु गायत्र्या जपं कृत्वा विशुद्ध्यति ॥ ७० ॥
क्षत्रियाणां यदुच्छिष्टमश्नात्यज्ञानतो द्विजः ॥
त्रिरात्रेण भवेच्छुद्धिर्यथा क्षत्रे तथा विशि ॥ ७१ ॥

---

१ अतिलंघयेत् । २ पंचगव्यप्राशनपूर्वकं जपविघातप्रत्यवायपरिहारार्थं प्रायश्चित्तम् ।

अभोज्यान्नं तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव वा ॥
जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान्पिबेत् ॥ ७२ ॥
असंस्पृश्येन संस्पृष्टः स्नानं तेन विधीयते ॥
तस्य चोच्छिष्टमश्नीयात्षण्मासान्कृच्छ्रमाचरेत्॥७३॥
अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव वा ॥
पुनः संस्कारमर्हंति त्रयो वर्णा द्विजातयः ॥ ७४ ॥
वपनं मेखला दंडं भैक्ष्यचर्यं व्रतानि च ॥
निवर्तंते द्विजातीनां पुनःसंस्कारकर्मणि ॥ ७५ ॥
गृहशुद्धिं प्रवक्ष्यामि अंतःस्थशवदूषिताम् ॥
प्रत्याज्यं मृन्मयं भांडं सिद्धमन्नं तथैव च ॥ ७६ ॥
गृहान्निष्क्रम्य तत्सर्वं गोमयेनोपलेपयेत् ॥
गोमयेनोपलिप्याथ छागेनाघ्रापयेत्पुनः[2] ॥ ७७ ॥
ब्राह्मैर्मंत्रैस्तु पूतं तु हिरण्यकुशवारिभिः ॥
तेनैवाभ्युक्ष्य तद्वेश्म शुध्यते नात्र संशयः ॥ ७८ ॥
राजन्यैः श्वपचैर्वापि बलाद्विचलितो द्विजः ॥
पुनः कुर्वीत संस्कारं पश्चात्कृच्छ्रत्रयं चरेत् ॥ ७९ ॥
शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते ॥
तदुच्छिष्टं तु संप्राश्य यत्नेन कृच्छ्रमाचरेत् ॥ ८० ॥
अतः परं प्रवक्ष्यामि सूतकस्य विनिर्णयम् ॥

---

१ पूर्वभुक्तावशिष्टमन्नम् ।　२ छागसंबंधिना पुरीषेण ।

गार्भिकत्तं पुनश्चैव कथयिष्याम्यतः परम् ॥ ८१ ॥
एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः ॥
त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥ ८२ ॥
व्रतिनः शास्त्रपूतस्य आहिताग्नेस्तथैव च ॥
राज्ञां तु सूतकं नास्ति यस्य चेच्छंति ब्राह्मणाः ॥८३॥
ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः ॥
वैश्यः पंचदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ८४ ॥
सपिंडानां तु सर्वेषां गोत्रजः सप्तपौरुषः ॥
पिंडांश्चोदकदानं च शावशौचं तथानुगम् ॥ ८५ ॥
चतुर्थे दशरात्रं स्यात्षडहः पंचमे तथा ॥
षष्ठे चैव त्रिरात्रं स्यात्सप्तमे त्र्यहमेव वा ॥ ८६ ॥
मृतसूतके तु दासीनां पत्नीनां चानुलोमिनाम् ॥
स्वामितुल्यं भवेच्छौचं मृते भर्तरि यौनिकम् ॥ ८७ ॥
शवस्पृष्टं तृतीये तु सचैलं स्नानमाचरेत् ॥
चतुर्थे सहमिश्रं स्यादेव शावविधिः स्मृतः ॥ ८८ ॥
एकत्र संस्कृतानां तु मातॄणामेकभोजिनाम् ॥
स्वामितुल्यं भवेच्छौचं विभक्तानां पृथक्पृथक् ॥ ८९
उष्ट्रीक्षीरमवीक्षीरं पक्वान्नं मृतसूतके ॥
पाचकान्नं नवश्राद्धं भुक्त्वा चांद्रायणं चरेत् ॥ ९० ॥
सूतकान्नमकृत्वाय यस्तु प्राश्नाति मानवः ॥

त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ॥ ९१ ॥
महायज्ञविधानं तु न कुर्यान्मृतजन्मनि ॥
होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥
बालस्त्वंतर्दशाहे तु पंचत्वं यदि गच्छति ॥ ९२ ॥
सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम् ॥ ९३ ॥
कृतचूडे प्रकुर्वीत उदकं पिंडमेव च ॥
स्वधाकारं प्रकुर्वीत नामोच्चारणमेव च ॥ ९४ ॥
ब्रह्मचारी यतिश्चैव मंत्रे पूर्वकृते तथा ॥
यज्ञे विवाहकाले च सद्यः शौचं विधीयते ॥ ९५ ॥
विवाहोत्सवयज्ञेषु अंतरा मृतसूतके ॥
पूर्वसंकल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥ ९६ ॥
मृतसज्जननोर्द्धं तु सूतकादौ विधीयते ॥
स्पर्शनाचमनाच्छुद्धिः सूतिकां चेन्न संस्पृशेत् ॥ ९७ ॥
पंचमेऽहनि विज्ञेयं संस्पर्शं क्षत्रियस्य तु ॥
सप्तमेऽहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥ ९८ ॥
दशमेऽहनि शूद्रस्य कर्तव्यं स्पर्शनं बुधैः ॥
मासेनैवात्मशुद्धिः स्यात्सूतके मृतके तथा ॥ ९९ ॥
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ १०० ॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥

ह्यग्निहोत्रविहीनस्य तस्मात्तं सूतकं भवेत् ॥ १०१ ॥
द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च ॥
कृच्छ्रातिकृच्छ्रं दातुः स्याद्धोतुः सांतपनं स्मृतम् ॥१०२॥
कुब्जवामनषंढेषु गद्गदेषु जडेषु च ॥
जात्यंधे बधिरे मूके न दोषः परिवेदने ॥ १०३ ॥
क्लीबे देशांतरस्थे च पतिते प्रव्रजितेऽपि वा ॥
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ १०४ ॥
पिता पितामहो यस्य अग्रजो वापि कस्यचित् ॥
अग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने ॥ १०५ ॥
भार्यामरणपक्षे वा देशांतरगतेऽपि वा ॥
अधिकारी भवेत्पुत्रस्तथा पातकसंयुते ॥ १०६ ॥
ज्येष्ठो भ्राता यदा नष्टो नित्यं रोगसमन्वितः ॥
अनुज्ञातस्तु कुर्वीत शंखस्य वचनं यथा ॥ १०७ ॥
नाग्नयः परिविंदंति न वेदा न तपांसि च ॥
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया ॥१०८ ॥
तस्मात्कुर्यात्सदा श्राद्धं श्रुतिस्मृत्युदितं च यत् ॥
नित्यं नैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम् ॥१०९॥
एकैकं वर्द्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् ॥
अमावास्यां न भुंजीत एष चांद्रायणो विधिः ॥११०॥
एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ॥

त्र्यहं परं च नाश्नीयादतिकृच्छ्रं तदुच्यते ॥
इत्येतत्कथितं पूर्वं महापातकनाशनम् ॥ १११ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ॥
न स्पृशंतीह पापानि महापातकजान्यपि ॥ ११२ ॥
वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते ॥ ११३ ॥
पद्मोदुंबरबिल्वाश्च कुशाश्वत्थपलाशकाः ॥
एतेषामुदकं पीत्वा पर्णकृच्छ्रं तदुच्यते ॥ ११४ ॥
पंचगव्यं च गोक्षीरं दधि मूत्रं शकृद्घृतम् ॥
जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सांतपनं स्मृतम् ॥ ११५ ॥
पृथक्सांतपनैर्द्रव्यैः षडहः सोपवासकः ॥
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतम् ॥ ११६ ॥
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुंक्ते त्वयाचितम् ॥
त्र्यहं परं च नाश्नीयात्प्राजापत्यो विधिः स्मृतः ॥ ११७ ॥
सायं तु द्वादश ग्रासाः प्रातः पंचदश स्मृताः ॥
अयाचितैश्चतुर्विंशं परैस्त्वनशनं स्मृतम् ॥ ११८ ॥
कुक्कुटांडप्रमाणं स्याद्यावद्वास्य विशेन्मुखे ॥
एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ॥ ११९ ॥
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पिबेत्पयः ॥
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रये ॥ १२० ॥

त्र्यहमुष्णानि पिबेदापस्त्रिपलं तु पयः पिबेत् ॥
पलमेकं तु वै सर्पिस्तप्तकृच्छ्रं विधीयते ॥ १२१ ॥
त्र्यहं तु दधिना भुंक्ते त्र्यहं भुंक्ते च सर्पिषा ॥
क्षीरेण तु त्र्यहं भुंक्ते वायुभक्षो दिनत्रयम् ॥ १२२ ॥
त्रिपलं दधि क्षीरेण पलमेकं तु सर्पिषा ॥
एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते ॥ १२३ ॥
एकभुक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन चैकेन पादकृच्छ्रं प्रकीर्तितम् ॥ १२४ ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ १२५ ॥
पिण्याकश्चामतक्रांबुसक्तूनां प्रतिवासरम् ॥
एकैकमुपवासः स्यात्सौम्यकृच्छ्रः प्रकीर्तितः ॥ १२६ ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ॥
तुलापुरुष इत्येष ज्ञेयः पंचदशाह्निकः ॥ १२७ ॥
कपिलायास्तु दुग्धाया धारोष्णं यत्पयः पिबेत् ॥
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥१२८॥
निशायां भोजनं चैव तज्ज्ञेयं नक्तमेव तु ॥
कलादिदेषु पापेषु चांद्रायणमथोदितम् ॥ १२९ ॥
अग्निहोत्रादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ॥
यत्फलं समवाप्नोति तथा कृच्छ्रैस्तपोधनाः ॥१३०॥

वेदाभ्यासरतः क्षांतो नित्यं शास्त्राण्यवेक्षयेत् ॥
शौचमृद्धार्यमिरतो गृहस्थोऽपि हि मुच्यते ॥ १३१ ॥
उक्तमेतद्द्विजातीनां महर्षे श्रूयतामिति ॥
अतः परं प्रवक्ष्यामि स्त्रीशूद्रपतनानि च ॥ १३२ ॥
जपस्तपस्तीर्थयात्रा प्रव्रज्या मंत्रसाधनम् ॥
देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ १३३ ॥
जीवद्भर्तरि या नारी उपोष्य व्रतचारिणी ॥
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् । १३४ ॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ॥
शंकरस्यापि विष्णोर्वा प्रयाति परमं पदम् ॥ १३५ ॥
जीवद्भर्तरि वामांगी मृते वापि सुदक्षिणे ॥
श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा ॥ १३६ ॥
सोमः शौचं ददौ तासां गंधर्वाश्च तथागिराः ॥
पावकः सर्वमेध्यत्वं मेध्यत्वं योषितां सदा ॥ १३७ ॥
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ॥
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥ १३८ ॥
वेदशास्त्राण्यधीते यः शास्त्रार्थं च निबोधयेत् ॥
तदासौ वेदवित्प्रोक्तो वचनं तस्य पावनम् ॥ १३९ ॥
एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ॥
स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैः ॥ १४० ॥

पावका इव दीप्यंते जपहोमैर्द्विजोत्तमाः ॥
प्रतिग्रहेण नश्यंति वारिणा इव पावकः ॥ १४१ ॥
तान्प्रतिग्रहजान्दोषान्प्राणायामैर्द्विजोत्तमाः ॥
नाशयंति हि विद्वांसो वायुर्मेघानिवांबरे ॥ १४२ ॥
भुंजमानो यदा विप्र आर्द्रपाणिस्तु तिष्ठति ॥
लक्ष्मीर्बलं यशस्तेज आयुश्चैव प्रहीयते ॥ १४३ ॥
यस्तु भोजनशालायामासनस्थ उपस्पृशेत् ॥
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चांद्रायणं चरेत् ॥ १४४ ॥
पात्रोपरि स्थिते पात्रे यस्तु हस्ताय्य उपस्पृशेत् ॥
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चांद्रायणं चरेत् ॥ १४५ ॥
अश्रद्धया च यद्दत्तं विप्रेभ्यो दैविके कृतौ ॥
न देवास्तृप्तिमायांति दातुर्भवति निष्फलम् ॥ १४६ ॥
हस्तं प्रक्षालयित्वा यः पिबेद्भुक्त्वा द्विजोत्तमः ॥
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥ १४७ ॥
नास्ति वेदात्परं शास्त्रं नास्ति मातुः परो गुरुः ॥
नास्ति दानात्परं मित्रमिह लोके परत्र च ॥ १४८ ॥
अपात्रेष्वपि यद्दत्तं दहत्यासप्तमं कुलम् ॥
हव्यं देवा न गृह्णंति कव्यं च पितरस्तथा ॥ १४९ ॥
आयसेन तु पात्रेण यदन्नमुपदीयते ॥
भोक्ता विष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ॥ १५० ॥

पैत्तलेन तु पात्रेण दीयमानं विचक्षणः ॥
न दद्याद्वामहस्तेन आयसेन कदाचन ॥ १५१ ॥
मृन्मयेषु च पात्रेषु यः श्राद्धे भोजयेत्पितॄन् ॥
अन्नदाता च भोक्ता च व्रजेतां नरकं च तौ ॥१५२ ॥
अभावे मृन्मये दद्यादनुज्ञातस्तु तैर्द्विजैः ॥
तेषां वचः प्रमाणं स्याद्यदन्नं चातिरिक्तकम् ॥१५३॥
सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ॥
भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुंक्ते तु किल्बिषम्॥१५४॥
न च कांस्येषु भुंजीयादापद्यपि कदाचन ॥
मलाशाः सर्व एवैते यतयः कांस्यभोजनाः ॥ १५५ ॥
कांस्यकस्य च यत्पात्रं गृहस्थस्य तथैव च ॥
कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं तयोः॥१५६॥

अत्राप्युदाहरंति ।

सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ॥
भुंजन्भिक्षुर्न दुष्येत दुष्येच्चैव परिग्रहे ॥ १५७ ॥
यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम् ॥
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ १५८ ॥
चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ॥
एकान्नं नैव भोक्तव्यं बृहस्पतिसमो यदि ॥ १५९ ॥

अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन् ॥
दशरात्रं पिबेद्गव्यमापस्तु त्र्यहमेव च ॥ १६० ॥
गोमूत्रेण तु संमिश्रं यावकं घृतपाचितम् ॥
एतद्भक्ष्यमिति प्रोक्तं भगवानत्रिरब्रवीत् ॥ १६१ ॥
ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ॥
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ १६२ ॥
षण्मासान्कामयेन्मर्त्यो गुर्विणीमेव वै स्त्रियम् ॥
आदंतजननादूर्ध्वमेवं धर्मो न हीयते ॥ १६३ ॥
ब्रह्महा प्रथमं चैव द्वितीयं गुरुतल्पगः ॥
तृतीयं तु सुरापेयं चतुर्थं स्तेयमेव च ॥ १६४ ॥
पापानां चैव संसर्गं पंचमं पातकं महत् ॥ १६५ ॥
एषामेव विशुद्ध्यर्थं चरेत्कृच्छ्राण्यनुक्रमात् ॥
त्रीणि वर्षाण्यकामश्चेद्ब्रह्महत्या पृथक्पृथक् ॥ १६६ ॥
अर्द्धं तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते ॥
षड्भागो द्वादशश्चैव विट्शूद्रयोस्तथा भवेत् ॥ १६७ ॥
त्रिरात्रात्फलमश्नीयाद्भूमौ शयनमेव च ॥
स्त्रीघाती शुद्ध्यतेऽप्येवं चरेत्कृच्छ्राब्दमेव वा ॥ १६८ ॥
रजकः शैलूषश्चैव वेणुकर्मोपजीवनः ॥
एतेषां यस्तु भुंक्ते वै द्विजश्चांद्रायणं चरेत् ॥ १६९ ॥

---

१ अर्धास्विन्नं यवादि ।

सर्वांत्यजानां गमने भोजने संप्रवेशने ॥
पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ॥ १७० ॥
चांडालभांडे यत्तोयं पीत्वा चैव द्विजोत्तमः ॥
गोमूत्रयावकाहारः सप्तषट्त्रिद्व्यहान्यपि ॥ १७१ ॥
संस्पृष्टं यस्तु पक्वान्नमंत्यजैर्वाप्युदक्यया ॥
अज्ञानाद्ब्राह्मणोऽश्नीयात्प्राजापत्यार्धमाचरेत् ॥ १७२ ॥
चांडालान्नं यदा भुंक्ते चातुर्वर्ण्यस्य निष्कृतिः ॥
चांद्रायणं चरेद्विप्रः क्षत्रः सांतपनं चरेत् ॥ १७३ ॥
षड्रात्रमाचरेद्वैश्यः पंचगव्यं तथैव च ॥
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुद्ध्यति ॥ १७४ ॥
ब्राह्मणो वृक्षमारूढश्चांडालो मूलसंस्पृशः ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ! १७५॥
ब्राह्मणान्समनुप्राप्य सवासाः स्नानमाचरेत् ॥
नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुद्ध्यति ॥ १७६ ॥
एकं वृक्षं समारूढश्चंडालो ब्राह्मणस्तथा ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथंभवेत् ॥ १७७ ॥
ब्राह्मणान्समनुज्ञाप्य सवासाः स्नानमाचरेत् ॥
अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ १७८ ॥
एकशाखासमारूढश्चंडालो ब्राह्मणो यदा ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥१७९

त्रिरात्रोपोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥
स्त्रियो म्लेच्छस्य संपर्काच्छुद्धिः सांतपने तथा ॥ १८० ॥
तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषाऽभिधीयते ॥ १८१ ॥
स वर्तेत यथा भार्यां गत्वा म्लेच्छस्य संगताम् ॥
सचैलं स्नानमादाय घृतस्य प्राशनेन च ॥ १८२ ॥
संगृहीतामपत्यार्थमन्यैरपि तथा पुनः ॥ १८३ ॥
चंडालम्लेच्छश्वपचकपालव्रतधारिणः ॥
अकामतः स्त्रियो गत्वा पराकेण विशुद्ध्यते ॥ १८४ ॥
कामतस्तु प्रसूतां वा तत्समो नात्र संशयः ॥
स एव पुरुषस्तत्र गर्भो भूत्वा प्रजायते ॥ १८५ ॥
तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः ॥
तैलाभ्यक्तो घृताभ्यक्तश्चंडालं स्पृशते द्विजः ॥
अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ १८६ ॥
केशकीटनखस्नायु अस्थिकण्टकमेव च ॥
स्पृष्ट्वा नद्युदके स्नात्वा घृतं प्राश्य विशुद्ध्यति ॥ १८७ ॥
मत्स्यास्थि जंबुकास्थीनि नखशुक्तिकपर्दिकाः ॥
हेमतप्तं घृतं पीत्वा तत्क्षणादेव शुद्ध्यति ॥ १८८ ॥
गोकुले कंदुशालायां तैलचक्रेक्षुयंत्रयोः ॥
अमीमांस्यानि शौचानि स्त्रीणां च व्याधितस्य च ॥ १८९ ॥

---

१ स्वर्णतप्तमिति क्वचित्पाठः । २ भक्ष्यस्वेदनशालायाम् ( भट्टी ) इति प्रसिद्धायामित्यर्थः ।

न स्त्री दुष्यति जारेण ब्राह्मणो वेदकर्मणा ॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥ १५० ॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगंधर्ववह्निभिः ॥
भुंजते मानवाः पश्चान्न ता दुष्यंति कर्हिचित् ॥१९१॥
असवर्णस्तु यो गर्भः स्त्रीणां योनौ निषेच्यते ॥
अशुद्धा सा भवेन्नारी यावद्गर्भं न मुंचति ॥ १९२ ।
विमुक्ते तु ततः शल्ये रजश्चापि प्रदृश्यते ॥
तदा सा शुद्ध्यते नारी विमलं काञ्चनं यथा ॥१९३॥
स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता ॥
बलान्नारी प्रभुक्ता वा चौरभुक्ता तथापि वा ॥ १९४ ॥
न त्याज्या दूषिता नारी न कामोऽस्या विधीयते ॥
ऋतुकाल उपासीत पुष्पकालेन शुद्ध्यति ॥ १९५ ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ॥
कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृताः ॥ १९६ ॥
एतान्गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च ॥
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैव तद्द्वयम् ॥ १९७ ॥
सकृद्भुक्ता तु या नारी म्लेच्छैश्च पापकर्मभिः ॥
प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च ॥ १९८ ॥
बलाद्धृता स्वयं वापि परप्रेरितया यदि ॥
सकृद्भुक्ता तु या नारी प्राजापत्येन शुद्ध्यति ॥ १९९॥

मारकदीर्वितपक्षां नारीणां यद्रजो भवेत् ॥
न तेन तद्व्रतं तासां विनश्यति कदाचन ॥ २०० ॥
मद्यसंस्पृष्टकुंभेषु यत्तोयं पिबति द्विजः ॥
कृच्छ्रपादेन शुद्ध्येत पुनः संस्कारमर्हति ॥ २०१ ॥
अंत्यजस्थास्तु ये वृक्षा बहुपुष्पफलोपगाः ॥
उपभोग्यास्तु ते सर्वे पुष्पेषु च फलेषु च ॥ २०२ ॥
चंडालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः ॥
कृच्छ्रपादेन शुद्ध्येत आपस्तंबोऽब्रवीन्मुनिः ॥ २०३ ॥
श्लेष्मोपानहविण्मूत्रस्त्रीरजोमद्यमेव च ॥
एभिः संदूषिते कूपे तोयं पीत्वा कथं विधिः ॥ २०४ ॥
एकं द्व्यहं त्र्यहं चैव द्विजातीनां विशोधनम् ॥
प्रायश्चित्तं पुनश्चैव नक्तं शूद्रस्य दापयेत् ॥ ॥ २०५ ॥
उचो वांते सचैलं तु विप्रस्तु स्नानमाचरेत् ॥
अर्द्धोषिते त्वहोरात्रमतिरिक्ते दिनत्रयम् ॥ २०६ ॥
शिरःकंठोरुपादे च सुरया यस्तु लिप्यते ॥
दशपंचत्रिरात्रैकाहं चरेदेवमनुक्रमात् ॥ २०७ ॥

अत्राप्युदाहरंति ।

[illegible] सकृत्पीत्वा द्विजोत्तमः ॥
गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति ॥ २०८ ॥
मद्यपस्य निषादस्य यस्तु भुंक्ते द्विजोत्तमः ॥

न देवा भुंजते तस्य न पिबंति हविर्जलम् ॥ २०९ ॥
चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधिता ॥
प्राजापत्येन शुद्ध्येत ब्राह्मणानां तु भोजनात् ॥२१०॥
ये च प्रव्रजिता विप्राः प्रव्रज्याग्निजलावहाः ॥
अनाशकान्निवर्तंते चिकीर्षंति गृहस्थितिम् ॥ २११ ॥
धारयेत्त्रीणि कृच्छ्राणि चांद्रायणमथापि वा ॥
जातिकर्मादिकं प्रोक्तं पुनः संस्कारमर्हति ॥ २१२ ॥
न शौचं नोदकं नाश्रु नापवादानुकंपने ॥
ब्रह्मदंडहतानां तु न कार्यं कटधारणम् ॥ २१३ ॥
स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत् ॥
गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ॥ २१४ ॥
वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ॥
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः ॥ २१५ ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ॥
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ २१६ ॥
यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी ॥
मंगलानि कुतस्तस्य कुतस्तस्य तमःक्षयः ॥ २१७ ॥
अतिदोहातिवाहाभ्यां नासिकाभेदनेन वा ॥
नदीपर्वतसंरोधे मृते पादोनमाचरेत् ॥ २१८ ॥
अष्टागवं धर्महलं षड्गवं व्यावहारिकम् ॥

चतुर्गवं नृशंसानां द्विगवं गववध्यकृत् ॥ २१९ ॥
द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम् ॥
षड्गवं तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतम् ॥२२० ॥
काष्ठलोष्टशिलागोघ्नः कृच्छ्रं सांतपनं चरेत् ॥
प्राजापत्यं चरेन्मृत्स्नी अतिकृच्छ्रं तु आयसः ॥२२१ ॥
प्रायश्चित्तेन तच्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥
अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम् ॥ २२२ ॥
शरभोष्ट्रहयान्नागान्सिंहशार्दूलगर्दभान् ॥
हत्वा च शूद्रहत्यायाः प्रायश्चित्तं विधीयते ॥ २२३ ॥
मार्जारगोधानकुलमंडूकांश्च पतत्रिणः ॥
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥२२४॥
चंडालस्य च संस्पृष्टं विण्मूत्रोच्छिष्टमेव वा ॥
त्रिरात्रेण विशुद्धं हि भुक्तोच्छिष्टं समाचरेत् ॥ २२५॥
वापीकूपतडागानां दूषितानां च शोधनम् ॥
उद्धरेत्षट्शतं पूर्णं पंचगव्येन शुद्ध्यति ॥ २२६ ॥
अस्थिचर्मावसिक्तेषु खरश्वानादिदूषिते ॥
उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥ २२७ ॥
गोदोहने चर्मपुटे च तोयं यन्त्राकरे कारुकशिल्पिहस्ते ॥
स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि २२८

१ मृत्तिकया मृद्लोष्टकेनेत्यर्थः । तृतीयार्थे प्रथमेयमार्षी ।

प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे ॥
अवास्पयज्ञेषु महोत्सवेषु तेष्वेव दोषा न विकल्पनीयाः२२९॥
प्रपास्वरण्ये घटकस्य कूपे द्रोण्यां जलं कोशविनिर्गतं च ॥
श्वपाकचंडालपरिग्रहे तु पीत्वा जलं पंचगव्येन शुद्धिः २३०॥
रेतोविण्मूत्रसंस्पृष्टं कौपं यदि जलं पिबेत् ॥
त्रिरात्रेणैव शुद्धिः स्यात्कुंभे सांतपनं तथा ॥ २३१ ॥
क्लिन्नाभिन्नशवं यत्स्यादज्ञानाच्च तथोदकम् ॥
प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३२ ॥
उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च ॥
प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३३ ॥
वर्णबाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः ॥
पंचरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ २३४ ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥
चर्मभांडस्थधाराभिस्तथा यंत्रोद्धृतं जलम् ॥ २३५ ॥
चंडालेन तु संस्पृष्टे स्नानमेव विधीयते ॥
उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुद्ध्यति ॥ २३६ ॥
आकराहृतवस्तूनि नाशुचीनि कदाचन ॥
आकराः शुचयः सर्वे वर्जयित्वा सुरालयम् ॥ २३७ ॥
भृष्टाभृष्टा यवाश्चैव तथैव चणकाः स्मृताः ॥
खर्जूरं चैव कर्पूरमन्यद्भृष्टतरं शुचि ॥ २३८ ॥

अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥
गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ॥ २३९ ॥
अदुष्टाः सततं धारा वातोद्धूताश्च रेणवः ॥ २४० ॥
बहूनामेककार्याणामेकश्चेदशुचिर्भवेत् ॥
अशौचमेकमात्रस्य नेतरेषां कथंचन ॥ २४१ ॥
एकपंक्त्युपविष्टानां भोजनेषु पृथक्पृथक् ॥
यद्येको लभते नीलीं सर्वे तेऽशुचयः स्मृताः ॥ २४२ ॥
यस्य पट्टे पट्टसूत्रे नीलीरक्तो हि दृश्यते ॥
त्रिरात्रं तस्य दातव्य शेषाश्चैवोपवासिनः ॥ २४३ ॥
आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि ॥
भगवन्केन शुद्धिः स्यात्ततो ब्रूहि तपोधन ॥ २४४ ॥
आदित्येऽस्तमिते रात्रौ स्पर्शहीनं दिवा जलम् ॥
तेनैव सर्वशुद्धिः स्याच्छवस्पृष्टं तु वर्जयेत् ॥ २४५ ॥
देशं कालं च य शक्तिं पापं चावेक्षयेत्ततः ॥
प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः॥२४६॥
देवयात्राविवाहेषु यज्ञप्रकरणेषु च ॥
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ॥ २४७ ॥
आरनालं तथा क्षीरं कन्दुकं दधि सक्तवः ॥
स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति ॥ २४८ ॥
आर्द्रमांसं घृतं तैलं स्नेहाश्च फलसंभवाः ॥

अंत्यभांडस्थितास्त्वेते निष्क्रांताः शुद्धिमाप्नुयुः २४९॥
अज्ञानात्पिबते तोयं ब्राह्मणः शूद्रजातिषु ॥
अहोरात्रोषितः स्नात्वा पंचगव्येन शुद्ध्यति ॥ २५० ॥
आहिताग्निस्तु यो विप्रो महापातकवान्भवेत् ॥
अप्सु प्रक्षिप्य पात्राणि पश्चादग्निं विनिर्दिशेत् ॥२५१ ॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ॥
अन्नं तस्य न भोक्तव्यं वृथापाको हि सस्मृतः ॥२५२॥
वृथापाकस्य भुंजानः प्रायश्चित्तं चरेद्द्विजः ॥
प्राणानाशु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति ॥ २५३ ॥
वैदिके लौकिके चापि हुतोच्छिष्टे जले क्षितौ ॥
वैश्वदेवं प्रकुर्वीत पंचसूनापनुत्तये ॥ २५४ ॥
कनीयान्गुणवांश्चैव श्रेष्ठश्चेन्निर्गुणो भवेत् ॥
पूर्वं पाणिं गृहीत्वा च गृह्याग्निं धारयेद्बुधः ॥ २५५ ॥
ज्येष्ठश्चेद्यदि निर्दोषो गृह्णात्यग्निं यवीयकः ॥
नित्यं नित्यं भवेत्तस्य ब्रह्महत्या न संशयः ॥ २५६ ॥
महापातकिसंस्पृष्टः स्नानमेव विधीयते ॥
संस्पृष्टस्य यदा भुंक्ते स्नानमेव विधीयते ॥ २५७ ॥
पतितैः सह संसर्गं मासार्द्धं मासमेव च ॥
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति ॥ २५८ ॥
कृच्छार्द्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः ॥

अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सांतपनं चरेत् ॥२५९॥
पतितानां यदा भुक्तं भुक्तं चंडालवेश्मनि ॥
मासार्द्धं तु पिबेद्वारि इति शातातपोऽब्रवीत् ॥ २६० ॥
गोब्राह्मणहतानां च पतितानां तथैव च ॥
अग्निना न च संस्कारः शंखस्य वचनं यथा ॥ २६१ ॥
यश्चंडालीं द्विजो गच्छेत्कथंचित्कामसंमोहितः ॥
त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्वशः ॥ २६२ ॥
पतितान्नमादाय भुक्त्वा वा ब्राह्मणो यदि ॥
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्दिशेत् ॥ २६३ ॥
अंत्यहस्तात्तु विक्षिप्तं काष्ठलोष्टतृणानि च ॥
न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत् ॥ २६४ ॥
चंडालं पतितं म्लेच्छं मद्यभांडं रजस्वलाम् ॥
द्विजः स्पृष्ट्वा न भुंजीत भुंजानो यदि संस्पृशेत् ॥२६५॥
अतः परं न भुंजीत त्यक्त्वान्नं स्नानमाचरेत् ॥
ब्राह्मणैः समनुज्ञातस्त्रिरात्रमुपवासयेत् ॥
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ २६६ ॥
भुंजानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा ॥
त्रिरात्रेणैव शुद्धिः स्यादथोच्छिष्टस्त्वहेन तु ॥ २६७ ॥
आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुनः ॥
चांद्रायणं चरेन्मासमिति शातातपोऽब्रवीत् ॥ २६८ ॥

पशुवेश्याभिगमने प्राजापत्यं विधीयते ॥
गवां गमने मनुप्रोक्तं व्रतं चान्द्रायणं चरेत् ॥ २६९ ॥
अमानुषीषु गोवर्जमुदक्यायामयोनिषु ॥
रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत् ॥ २७० ॥
उदक्यां सूतिकां वापि अन्त्यजां स्पृशते यदि ॥
त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष पुरातनः ॥ २७१ ॥
संसर्गं यदि गच्छेच्चेदुदक्यया तथान्त्यजः ॥
प्रायश्चित्ती स विज्ञेयः पूर्वं स्नानं समाचरेत् ॥ २७२ ॥
पञ्चरात्रं चरेत्कृच्छ्रं पीत्वा तु दिनत्रयम् ॥
दिनत्रयं तथा पाने भक्षणे पञ्च सप्त वा ॥ २७३ ॥

स्मृत्यन्तरम् ।

अङ्गीकारेण ज्ञातीनां ब्राह्मणानुग्रहेण च ॥
पर्षत् तत्र पापिष्ठा महापातकिनोऽपि ये ॥ २७४ ॥
भोजने तु प्रसक्तानां प्राजापत्यं विधीयते ॥
दन्तकाष्ठं त्वहोरात्रमेव शौचविधिः स्मृतः ॥ २७५ ॥
रजस्वला यदा स्पृष्टा श्वानचण्डालवायसैः ॥
निराहारा भवेत्तावत्स्नात्वा कालेन शुध्यति ॥ २७६ ॥
रजस्वला यदा स्पृष्टा उष्ट्रजम्बुकशूकरैः ॥
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥ २७७ ॥

---

१ मूत्रं गोमूत्रम् । २ क्षीरं गोमयम् ।

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या ॥
एकरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥ २७८ ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मण्या क्षत्रियी च या ॥
त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा ॥२७९॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मण्या वैश्यसंभवा ॥
चतूरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥ २८० ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मण्या शूद्रसंभवा ॥
षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः ॥२८१ ॥
अकामतश्चरेदूर्ध्वं ब्राह्मणी सर्वतः स्पृशेत् ॥
चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्त्तिता ॥ २८२ ॥
उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः ॥
भोजने मूत्रचारे च शंखस्य वचनं यथा ॥ २८३ ॥
स्नानं ब्राह्मणसंस्पर्शे जपहोमौ तु क्षत्रिये ॥
वैश्ये नक्तं च कुर्वीत शूद्रे चैव उपोषणम् ॥ २८४ ॥
चर्मके रजके वैश्ये धीवरे नटके तथा ॥
एतान्स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन्॥२८५॥
एतैः स्पृष्ट्वा द्विजो नित्यमेकरात्रं पयः पिबेत् ॥
उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुद्ध्यति॥२८६॥
यस्तुच्छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ॥
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्ध्यति ॥ २८७ ॥

अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत् ॥
मासोपवासं कुर्वीत चांद्रायणमथापि वा ॥ २८८ ॥
वृथा मिथ्यापयोगेन भ्रूणहत्याव्रतं चरेत् ॥
अब्भक्षो द्वादशाहेन पराकेणैव शुद्ध्यति ॥ २८९ ॥
शठं च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत ॥
निर्गुणं च गुणी हत्वा पराकं व्रतमाचरेत् ॥ २९० ॥
उपपातकसंयुक्तो मानवो म्रियते यदि ॥
तस्य संस्कारकर्ता च प्राजापत्यद्वयं चरेत् ॥ २९१ ॥
असंजातोऽतिसन्नेहं कदाचित्स्पृश्यते द्विजः ॥
त्रिरात्रमाचरेन्नक्तैर्निःस्नेहमथवा चरेत् ॥ २९२ ॥
विडालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च ॥
केशकीटावपन्नं च पिबेद्ब्राह्मीं सुवर्चलाम् ॥ २९३ ॥
उष्ट्रयानं समारुह्य खरयानं च कामतः ॥
स्नात्वा विप्रो जितप्राणः प्राणायामेन शुद्ध्यति॥२९४॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥
त्रिः पठेद्वा यतप्राणः प्राणायामः स उच्यते ॥ २९५ ॥
शकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम् ॥
क्षीरमष्टगुणं देयं पंचगव्यं तथा दधि ॥ २९६ ॥
पंचगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ॥
उभौ तौ तुल्यदोषौ च वसतो नरके चिरम् ॥ २९७ ॥

अजा गावो महिष्यश्च अमेध्यं भक्षयंति याः ॥
दुग्धं हव्ये च कव्ये च गोमयं न विलेपयेत् ॥२९८॥
अनस्तनी[1] चौर्यिका वा या च स्वस्तनपायिनी ॥
तासां दुग्धं न होतव्यं हुतं चैवाहुतं भवेत् ॥ २९९ ॥
प्राशौदने च सोमे च सीमंतोन्नयने तथा ॥
जातश्राद्धे नवश्राद्धे भुक्त्वा चांद्रायणं चरेत् ॥ ३००॥
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ॥
स्वसुतान्नं[2] च यो भुंक्ते स भुंक्ते पृथिवीमलम् ॥३०१॥
स्वसुता अप्रजाता[3] चेन्नाश्नीयात्तद्गृहे पिता ॥
भुंक्ते स्वरूपा आप्ययान्नं पूयं स नरकं व्रजेत् ॥ ३०२ ॥
अधीत्य चतुरो वेदान्सर्वशास्त्रार्थतत्त्ववित् ॥
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः ॥ ३०३ ॥
नवश्राद्धे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ॥
पतंति पितरस्तस्य यो भुंक्तेऽनापदि द्विजः ॥ ३०४ ॥
चांद्रायणं नवश्राद्धे पराको मासिके तथा ॥
त्रिपक्षे चैव कृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव च ॥३०५॥
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ॥
ब्रह्मचर्यमनाधाय मासश्राद्धेषु पर्वसु ॥ ३०६ ॥
द्वादशाहे त्रिपक्षेऽब्दे यस्तु भुंक्ते द्विजोत्तमः ॥

---

१ अधिकस्तनी । २ स्वकन्याया अन्नम् । ३ अप्रसूता—तावदिति शेषः ।

पतित पितरस्तस्य ब्रह्मलोके गता अपि ॥ ३०७ ॥
पक्षे वा यदि वा मासे यस्य नाश्नंति वै द्विजाः ॥
भुक्त्वा दुरात्मनस्तस्य द्विजश्चांद्रायणं चरेत् ॥ ३०८ ॥
एकादशाहेऽहोरात्रं भुक्त्वा संचयनें त्र्यहम् ॥
उपोष्य विधिवद्विप्रः कूष्मांडीं जुहुयाद्घृतम् ॥ ३०९ ॥
यत्र वेदध्वनिश्रांतं न च गोभिरलंकृतम् ॥
यन्न बालैः परिवृतं श्मशानमिव तद्गृहम् ॥ ३१० ॥
हास्येऽपि बहवो यत्र विना धर्मं वदंति हि ॥
विनापि धर्मशास्त्रेण स धर्मः पावनः स्मृतः ॥ ३११ ॥
हीनवर्णे च यः कुर्यादज्ञानादभिवादनम् ॥
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्ध्यति ॥ ३१२ ॥
समुत्पन्ने यदा स्नाने भुंक्ते वापि पिबेद्यदि ॥
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥ ३१३ ॥
अंगुल्या दंतकाष्ठं च प्रत्यक्षं लवणं तथा ॥
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ ३१४ ॥
दिवा कपित्थच्छायायां रात्रौ दधि शमीषु च ॥
कार्पासं दंतकाष्ठं च विष्णोरपि श्रियं हरेत् ॥ ३१५
शूर्पवातो नखाग्रांबु स्नानवस्त्रं घटोदकम् ॥
मार्जनीरजः केशांबु देवतायतनोद्भवम् ॥ ३१६ ॥

तेनावगुंठितं तेषु गंगांभःप्लुत एव सः ॥
मार्जनीरेणुकेशाम्बु हंति पुण्यं दिवाकृतम् ॥ ३१७
मृत्तिकाः सप्त न ग्राह्या वल्मीके ऊषरस्थले ॥
अंतर्जले श्मशानान्ते वृक्षमूले सुरालये ॥ ३१८ ॥
वृषभैश्च तथोत्खाते श्रेयस्कामैः सदा बुधैः ॥
शुचौ देशे तु संग्राह्या शर्कराश्मविवर्जिता ॥ ३१९ ॥
पुरीषे मैथुने होमे प्रस्रावे दंतधावने ॥
स्नानभोजनजाप्येषु सदा मौनं समाचरेत् ॥ ३२० ॥
यस्तु संवत्सरं पूर्णं भुंक्ते मौनेन सर्वदा ॥
युगकोटिसहस्रेषु स्वर्गलोके महीयते ॥ ३२१ ॥
स्नानं दानं जपं होमं भोजनं देवतार्चनम् ॥
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ ३२२ ॥
सुवर्णस्यापि यो दद्यात्पातयित्वा द्विजोत्तमम् ॥
नाशयित्वा तु तत्सर्वं भ्रूणहत्याफलं लभेत् ॥ ३२३ ॥
ग्रहणोद्वाहसंक्रांतौ स्त्रीणां च प्रसवे तथा ॥
दानं नैमित्तिकं ज्ञेयं रात्रावपि प्रशस्यते ॥ ३२ ॥
क्षौमजं वाथ कार्पासं पट्टसूत्रमथापि वा ॥
यज्ञोपवीतं यो दद्याद्वस्त्रदानफलं लभेत् ॥ ३२५ ॥
कांस्यस्य भाजनं दद्याद्घृतपूर्णं सुशोभनम् ॥
तथा भक्त्या विधानेन अग्निष्टोमफलं लभेत् ॥ ३२६ ॥

श्राद्धकाले तु यो दद्याच्छोभने च उपानहौ ॥
स गच्छन्नन्यमार्गेऽपि अश्वदानफलं लभेत् ॥ ३२७ ॥
तैलपात्रं तु यो दद्यात्संपूर्णं तु समाहितः॥
स गच्छति ध्रुवं स्वर्गं नरो नास्त्यत्र संशयः ॥३२८॥
दुर्भिक्षे अन्नदाता च सुभिक्षे च हिरण्यदः ॥
पानप्रदस्त्वरण्ये तु स्वर्गे लोके महीयते ॥ ३२९ ॥
यावदर्धप्रसूता गौस्तावत्सा पृथिवी स्मृता ॥
पृथिवी तेन दत्ता स्यादीदृशीं गां ददाति यः॥३३०॥
तेनाग्नयो हुताः सम्यक्पितरस्तेन तर्पिताः ॥
देवाश्च पूजिताः सर्वे यो ददाति गवाह्निकम् ॥३३१॥
जन्मप्रभृति यत्पापं मातृकं पैतृकं तथा ॥
तत्सर्वं नश्यति क्षिप्रं वस्त्रदानान्न संशयः ॥ ३३२ ॥
कृष्णाजिनं तु यो दद्यात्सर्वोपस्करसंयुतम् ॥
उद्धरेन्नरकस्थानात्कुलान्येकोत्तरं शतम् ॥ ३३३ ॥
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ॥
शूलपाणिस्तु भगवानभिनंदति भूमिदम्॥ ३३४ ॥
वालुकानां कृता राशिर्यावत्सप्तर्षिमंडलम् ॥
गते वर्षशते चैव पलमेकं विशीर्यति ॥ ३३५ ॥
क्षयं च दृश्यते तस्य कन्यादानेन चैव हि ॥ ३३६ ॥

आतुरे भगवाता च त्रीणि दानफलानि च ॥
सर्वेषामेव दानानां विद्यादानं ततोऽधिकम् ॥ ३३७ ॥
कृष्णादिरजने दद्याद्विप्राय च न कैतवे ॥
सकामः स्वर्गमाप्नोति निष्कामो मोक्षमाप्नुयात्॥३३८॥
ब्राह्मणे वेदविदुषि सर्वशास्त्रविशारदे ॥
मातापितृपरे चैव ऋतुकालाभिगामिनि ॥ ३३९ ॥
शीलचारित्रसंपूर्णे प्रातःस्नानपरायणे ॥
तस्यैव दीयते दानं यदीच्छेच्छ्रेय आत्मनः ॥ ३४० ॥
संपूज्यं विदुषो विप्रानन्येभ्योऽपि प्रदीयते ॥
तस्मादेवं नैव कर्तव्यं न दृष्टं न श्रुतं मया ॥ ३४१ ॥
अतःपरं प्रवक्ष्यामि श्राद्धकर्मणि ये द्विजाः ॥
पितृणामक्षयं दानं दत्तं येषां तु निष्फलम् ॥ ३४२ ॥
न हीनांगो न रोगी च श्रुतिस्मृतिविवर्जितः ॥
नित्यं चानृतवादी च तांस्तु श्राद्धे न भोजयेत् ३४३॥
हिंसारतं च कपटं पुषं श्रुतं च यः ॥
विकारं कपिलं काणं श्वित्रिणं रोगिणं तथा ॥ ३४४ ॥
दुश्चर्माणं शीर्णकेशं पांडुरोगं जटाधरम् ॥
भारवाहिनं रौद्रं च द्विभार्यं वृषलीपतिम् ॥ ३४५ ॥

१ त्रीणि–धर्मार्थकामरूपाणि ।

भेदकारी भवेच्चैव बहुपीडाकरोऽपि वा ॥
हीनातिरिक्तगात्रो वा तमप्यपनयेत्तथा ॥ ३४६ ॥
बहुभोक्ता दीनवक्त्रो मत्सरी क्रूरबुद्धिमान् ॥
एतेषां नैव दातव्यः कदाचित्तु प्रतिग्रहः ॥ ३४७ ॥
अथ चेन्मंत्रविद्युक्तः शारीरैः पंक्तिदूषणैः ॥
अदूष्यं तं यमः प्राह पंक्तिपावन एव सः ॥ ३४८ ॥
श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ॥
काणः स्यादेकहीनोऽपि द्वाभ्यामंधः प्रकीर्तितः ॥३४९॥
न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः ॥
तस्य श्राद्धं न दातव्यं त्वंधकस्यात्रिरब्रवीत् ॥ ३५० ॥
तस्माद्वेदेन शास्त्रेण ब्राह्मण्यं ब्राह्मणस्य तु ॥
न चैकेनैव वेदेन भगवानत्रिरब्रवीत् ॥ ३५१ ॥
योगस्थैर्लोचनैर्युक्तः पादाग्रं च प्रपश्यति ॥
लौकिकज्ञैश्च शास्त्रोक्तं पश्येच्चैषोऽक्षरोत्तरम् ॥ ३५२ ॥
वेदैश्च ऋषिभिर्गीतं दृष्टिमाञ्छास्त्रवेदवित् ॥
व्रतिनं च कुलीनं च श्रुतिस्मृतिरतं सदा ॥
तादृशं भोजयेच्छ्राद्धे पितॄणामक्षयं भवेत् ॥ ३५३ ॥
यावतो ग्रसते ग्रासान्पितॄणां दीप्ततेजसाम् ॥
पिता पितामहश्चैव तथैव प्रपितामहः ॥ ३५४ ॥

नरकास्था विमुच्यंते ध्रुवं यांति त्रिविष्टपम् ॥
तस्माद्द्विजं परीक्षेत श्राद्धकाले प्रयत्नतः ॥ ३५५ ॥
न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः ॥
इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः ॥ ३५६ ॥
सूर्ये कन्यागते कुर्याच्छ्राद्धं यो न गृहाश्रमी ॥
धनं पुत्राः कुलं तस्य पितृनिःश्वासपीडया ॥ ३५७ ॥
कन्यागते सवितरि पितरो यांति तत्सुतान् ॥
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥ ३५८ ॥
ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ॥
पुनः स्वभवनं यांति शापं दत्त्वा सुदारुणम् ॥ ३५९ ॥
पुत्रं वा भ्रातरं वापि दौहित्रं पौत्रकं तथा ॥
पितृकार्ये प्रसक्ता ये ते यांति परमां गतिम् ॥ ३६० ॥
यथा निर्मथनादग्निः सर्वकाष्ठेषु तिष्ठति ॥
तथा संदृश्यते धर्मः श्राद्धदानान्न संशयः ॥ ३६१ ॥
यः प्राप्नोति तदा सर्वं कन्यागते च गंगया ॥
सर्वक्षेत्राभिगमनं सर्वतीर्थावगाहनम् ॥ ३६२ ॥
सर्वयज्ञफलं विद्याच्छ्राद्धदानान्न संशयः ॥ ३६३ ॥
महापातकसंयुक्तो यो युक्तश्चोपपातकैः ॥

१ नवरात्रीविशेषः ।

घनैर्मुक्तो यथा भानू राहुमुक्तश्च चंद्रमाः ॥ ३६४ ॥
सर्वपापविनिर्मुक्तः संतापं च विलंघयेत् ॥
सर्वसौख्यमयं प्राप्तः श्राद्धदानान्न संशयः ॥ ३६५ ॥
सर्वेषामेव दानानां श्राद्धदानं विशिष्यते ॥
मेरुतुल्यं कृतं पापं श्राद्धदानं विशोधनम् ॥ ३६६ ॥
श्राद्धं कृत्वा तु मर्त्यो वै स्वर्गलोके महीयते ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥ ३६७ ॥
वैश्यस्य चान्नमेवाज्यं शूद्रान्नं रुधिरं भवेत् ॥
एतत्सर्वं यथाऽऽख्यातं श्राद्धकाले समुत्थिते ॥ ३६८ ॥
वैश्वदेवे च होमे च देवताभ्यर्चने जपेत् ॥
अमृतं तेन विप्रान्नमृग्यजुःसामसंस्मृतम् ॥ ३६९ ॥
व्यवहारानुपूर्व्येण धर्मेण बालिभिर्जितम् ॥
क्षत्रियान्नं पयस्तेन घृतान्नं[1] यज्ञपालने ॥ ३७० ॥
देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ॥
पशुर्म्लेच्छोऽपि चंडालो विप्रा दशविधाः स्मृताः॥३७१॥
सन्ध्या स्नानं जपं होमं देवतानित्यपूजनम् ॥
अतिथिं वैश्वदेवं च देवब्राह्मण उच्यते ॥ ३७२ ॥
शाके पत्रे फले मूले वनवासे सदा रतः ॥
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥ ३७३ ॥

१ वैश्यान्नमितिशेषः ।

वेदांतं पठते नित्यं सर्वसंगं परित्यजेत् ॥
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥ ३७४ ॥
अस्त्राहताश्च धन्वानः संग्रामे सर्वसंमुखे ॥
आरंभे निर्जिता येन स विप्रः क्षत्र उच्यते ॥ ३७५ ॥
कृषिकर्मरतो यश्च गवां च प्रतिपालकः ॥
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥ ३७६ ॥
लाक्षालवणसंमिश्रं कुसुंभं क्षीरसर्पिषः ॥
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥ ३७७ ॥
चोरश्च तस्करश्चैव सूचको दंशकस्तथा ॥
मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥३७८॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः ॥
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥ ३७९ ॥
वापीकूपतडागानामारामस्य सरःसु च ॥
निःशंकं रोधकश्चैव स विप्रो म्लेच्छ उच्यते ॥ ३८० ॥
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः ॥
निर्दयः सर्वभूतेषु विप्रश्चंडाल उच्यते ॥ ३८१ ॥
वेदैर्विहीनाश्च पठंति शास्त्रं शास्त्रेण हीनाश्च पुराणपाठाः ॥
पुराणहीनाः कृषिणो भवंति भ्रष्टास्ततो भागवता भवंति॥३८२ ॥
ज्योतिर्विदो ह्यथर्वाणः कीराः पौराणपाठकाः ॥
श्राद्धे यज्ञे महादाने वरणीयाः कदाचन ॥ ३८३ ॥

श्राद्धे च पितरो घोरं दानं चैव तु निष्फलम् ॥
यज्ञे च फलहानिः स्यात्तस्मात्तान्परिवर्जयेत् ॥ ३८४ ॥
आविकश्चित्रकारश्च वैद्यो नक्षत्रपाठकः ॥
चतुर्विप्रा न पूज्यंते बृहस्पतिसमा यदि ॥ ३८५ ॥
मागधो माथुरश्चैव कापटः कौकटानजौ ॥
पंच विप्रा न पूज्यंते बृहस्पतिसमा यदि ॥ ३८६ ॥
क्रयक्रीता च या कन्या पत्नी सा न विधीयते ॥
तस्यां जाताः सुतास्तेषां पितृपिंडं न विद्यते ॥ ३८७
अष्टशल्यागतो नीरं पाणिना पिबते द्विजः ॥
सुरापानेन तत्तुल्यं तुल्यं गोमांसभक्षणम् ॥ ३८८ ॥
ऊर्ध्वजंघेषु विप्रेषु प्रक्षाल्य चरणद्वयम् ॥
तावच्चंडालरूपेण यावद्गंगां न मज्जति ॥ ३८९ ॥
दीपशय्यासनच्छायां कार्पासं दंतधावनम् ॥
अजाखुररजःस्पर्शः शक्रस्यापि श्रियं हरेत् ॥ ३९० ॥
गृहाद्दशगुणं कूपं कूपाद्दशगुणं तटम् ॥
तटाद्दशगुणं नद्यां गङ्गा संख्या न विद्यते ॥ ३९१ ॥
स्रवद्यद्ब्राह्मणं तोयं रहस्यं क्षत्रियं तथा ॥
वापी कूपे तु वैश्यस्य शौद्रं भांडोदकं तथा ॥ ३९२ ॥

---

१ घोरं नरकं व्रजंतीतिशेषः ।

तीर्थस्नानं महादानं यच्चान्यत्तिलतर्पणम् ॥
अब्दमेकं न कुर्वीत महागुरुनिपाततः ॥ ३९३ ॥
गंगा गया त्वमावास्या वृद्धिश्राद्धे क्षयेऽहनि ॥
मघा पिंडप्रदानं स्यादन्यत्र परिवर्जयेत् ॥ ३९४ ॥
घृतं वा यदि वा तैलं पयो वा यदि वा दधि ॥
चत्वारो ह्याज्यसंस्थाना हुतं नैव तु वर्जयेत् ॥ ३९५ ॥
श्रुत्वैतानृषयो धर्मान्भाषितानत्रिणा स्वयम् ॥
इदमूचुर्महात्मानं सर्वे ते धर्मनिष्ठिताः ॥ ३९६ ॥
य इदं धारयिष्यंति धर्मशास्त्रमतंद्रिताः ॥
इह लोके यशः प्राप्य ते यास्यंति त्रिविष्टपम् ॥ ३९७ ॥
विद्यार्थी लभते विद्यां धनकामो धनानि च ॥
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३९८ ॥

इति श्रीमदत्रिमहर्षिस्मृतिः समाप्ता ॥ १ ॥

॥ श्रीः ॥

# विष्णुस्मृतिः २.

## प्रथमोऽध्यायः १.

श्रीगणेशाय नमः ॥ अथ विष्णुप्रोक्तधर्मशास्त्रप्रारंभः
विष्णुमेकाग्रमासीनं श्रुतिस्मृतिविशारदम् ॥
पप्रच्छुर्मुनयः सर्वे कलापग्रामवासिनः ॥ १ ॥
कृते युगे ह्यपक्षीणे लुप्तो धर्म्मः सनातनः ॥
तत्र वै क्षीयमाणे च धर्मो न प्रतिमार्गितः ॥ २ ॥
त्रेतायुगेऽथ संप्राप्ते कर्तव्यश्चास्य संग्रहः ॥
यथा संप्राप्यतेऽस्माभिस्तत्त्वन्नो वक्तुमर्हसि ॥ ३ ॥
वर्णाश्रमाणां यो धर्मो विशेषश्चैव यः कृतः ॥
भेदस्तथैव चैषां यस्तन्नो ब्रूहि द्विजोत्तम ॥ ४ ॥
ऋषीणां समवेतानां त्वमेव परमो मतः ॥
धर्मस्येह समस्तस्य नान्यो वक्तास्ति सुव्रत ॥ ५ ॥
श्रुत्वा धर्मं चरिष्यामो यथावत्परिभाषितम् ॥
तस्माद्ब्रूहि द्विजश्रेष्ठ धर्मकामा इमे द्विजाः ॥ ६ ॥
इत्युक्तो मुनिभिस्तैस्तु विष्णुः प्रोवाच तांस्तदा ॥
अनघाः श्रूयतां धर्मो वक्ष्यमाणो मया क्रमात् ॥ ७

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव तथा परे ॥
एतेषां धर्मसारं यद्वक्ष्यमाणं निबोधत ॥ ८ ॥
ऋतावृतौ तु संयोगाद्ब्राह्मणो जायते स्वयम् ॥
तस्माद्ब्राह्मणसंस्कारं गर्भादौ तु प्रयोजयेत् ॥ ९ ॥
सीमंतोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ॥
गर्भस्यैव तु संस्कारो गर्भे गर्भे प्रयोजयेत् ॥ १० ॥
जातकर्म तथा कुर्यात्पुत्रे जाते यथोदितम् ॥
बहिर्निष्क्रमणं चैव तस्य कुर्याच्छिशोः शुभम् ॥ ११ ।
षष्ठे मासे च संप्राप्ते अन्नप्राशनमाचरेत् ॥
तृतीयेऽब्दे च संप्राप्ते केशकर्म समाचरेत् ॥ १२ ॥
गर्भाष्टमे तथा कर्म ब्राह्मणस्योपनायनम् ॥
द्विजत्वे त्वथ संप्राप्ते सावित्र्यामधिकारभाक् ॥ १३ ।
गर्भैकादशे सैके कुर्यात्क्षत्रियवैश्ययोः ॥
कारयेद्द्विजकर्माणि ब्राह्मणेन यथाक्रमम् ॥ १४ ॥
शूद्रश्चतुर्थो वर्णस्तु सर्वसंस्कारवर्जितः ॥
उक्तस्तस्य तु संस्कारो द्विजे स्वात्मनिवेदनम् ॥ १५
यो यस्य विहितो दण्डो मेखलाजिनधारणम् ॥
सूत्रं वस्त्रं च गृह्णीयाद्ब्रह्मचर्येण यन्त्रितः ॥ १६ ॥
ब्राह्मे मुहूर्ते उत्थाय चोपस्पृश्य प्रयतस्तथा ॥
निरुध्य ततः प्राणांस्तिष्ठेन्मौनी समाहितः ॥ १७ ।

अन्देवतैः पवित्रैस्तु कृत्वात्मपरिमार्जनम् ॥
सावित्रीं च जपंस्तिष्ठेदा सूर्योदयनात्पुरा ॥ १८ ॥
अग्निकार्यं ततः कुर्यात्प्रातरेव व्रतं चरेत् ॥
गुरवे तु ततः कुर्यात्पादयोरभिवादनम् ॥ १९ ॥
समित्कुशांश्चोदकुंभमाहृत्य गुरवे व्रती ॥
प्रांजलिः सम्यगासीन उपस्थाय यतः सदा ॥ २० ॥
यं यं ग्रंथमधीयीत तस्य तस्य व्रतं चरेत् ॥
सावित्र्युपक्रमात्सर्वस्यावेदग्रहणोत्तरम् ॥ २१ ॥
द्विजातिषु चरेद्भैक्ष्यं भिक्षाकाले समागते ॥
निवेद्य गुरवेऽश्नीयात्संमतो गुरुणा व्रती ॥ २२ ॥
सायंसन्ध्यामुपासीनो गायत्र्यष्टशतं जपेत् ॥
द्विकालभोजनार्थं च तथैव पुनराहरेत् ॥ २३ ॥
वेदस्वीकरणे हृष्टो गुर्वधीनो गुरोर्हितः ॥
निष्ठां तत्रैव यो गच्छेन्नैष्ठिकः स उदाहृतः ॥ २४ ॥
अनेन विधिना सम्यक्कृत्वा वेदमधीत्य च ॥
गृहस्थधर्ममाकांक्षन्गुरुगेहादुपागतः ॥ २५ ॥
अनेनैव विधानेन कुर्याद्दारपरिग्रहम् ॥
कुले महति सम्भूतां सवर्णां लक्षणान्विताम् ॥ २६
परिणीय तु षण्मासान्वत्सरं वा न संविशेत् ॥
औदुंबरायणो नाम ब्रह्मचारी गृहे गृहे ॥ २७ ॥

ऋतुकाले तु संप्राप्ते पुत्रार्थी संविशेत्तदा ॥
जाते पुत्रे तथा कुर्यादग्न्याधेयं गृहे वसन् ॥ २८ ॥
पुत्रे जातेऽऋतौ गच्छन्संप्रदुष्येत्सदा गृही ॥
चतुर्थे ब्रह्मचारी च गृहे तिष्ठन्न विस्मृतः ॥ २९ ॥

इति वैष्णवधर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः २.

अतः परं प्रवक्ष्यामि गृहिणां धर्ममुत्तमम् ॥
प्राजापत्यपदस्थानं सम्यक्कृत्यं निबोधत ॥ १ ॥
सर्वः स्वप्ने समुत्थाय कृतशौचः समाहितः ॥
स्नात्वा संध्यामुपासीत सर्वकालमतंद्रितः ॥ २ ॥
अज्ञानाद्यदि वा मोहाद्रात्रौ यद्दुरितं कृतम् ॥
प्रातःस्नानेन तत्सर्वं शोधयंति द्विजोत्तमाः ॥ ३ ॥
प्रविश्याथाग्निहोत्रं तु हुत्वाग्निं विधिवत्ततः ॥
शुचौ देशे समासीनः स्वाध्यायं शक्तितोऽभ्यसेत्॥ ४
स्वाध्यायान्ते समुत्थाय स्नानं कृत्वा तु मंत्रवत् ॥
देवानृषीन्पितॄंश्चापि तर्पयेत्तिलवारिणा ॥ ५ ॥
मध्याह्ने त्वथ संप्राप्ते शिष्टं भुंजीत वाग्यतः ॥
भुक्तोपविष्टो विश्रांतो ब्रह्म किंचिद्विचारयेत् ॥ ६ ॥
इतिहासं प्रयुंजीत त्रिकालसमये गृही ॥

काले चतुर्थे संप्राप्ते गृहे वा यदि वा बहिः ॥ ७ ॥
आसीनः पश्चिमां संध्यां गायत्रीं शक्तितो जपेत् ॥
हुत्वा चाथाग्निहोत्रं तु कृत्वा चाग्निपरिक्रियाम् ॥ ८ ॥
बलिं च विधिवद्दत्त्वा भुंजीत विधिपूर्वकम् ॥
दिवा वा यदि वा रात्रावतिथिस्त्वागमेद्यदि ॥ ९ ॥
तृणभूवारिवाग्भिस्तु पूजयेत्तं यथाविधि ॥
कथाभिः प्रीतिमाहृत्य विद्यादीनि विचारयेत् ॥ १० ॥
संनिवेश्याथ विप्रं तु संविशेत्तदनुज्ञया ॥
यदि योगी तु संप्राप्तो भिक्षार्थी समुपस्थितः ॥ ११ ॥
योगिनं पूजयेन्नित्यमन्यथा किल्बिषी भवेत् ॥
पुरे वा यदि वा ग्रामे योगी सन्निहितो भवेत् ॥ १२ ॥
पूज्या नित्यं भवंत्येव सर्वे चैव निवासिनः ॥
तस्मात्संपूजयेन्नित्यं योगिनं गृहमागतम् ॥ १३ ॥
तस्मिन्प्रयुक्ता पूजा या साऽक्षयायोपकल्पते ॥
गृहमेधिनां यत्प्रोक्तं स्वर्गसाधनमुत्तमम् ॥ १४ ॥
ब्राह्मे मुहूर्ते उत्थाय तत्सर्वं सम्यगाचरेत् ॥
चतुःप्रकारं भिद्यंते गृहिणो धर्मसाधकाः
वृत्तिभेदेन सततं ज्यायांस्तेषां परः परः ॥ १५ ॥
कुसूलधान्यको वा स्यात्कुंभीधान्यक एव वा ॥ १६
त्र्यहैहिको वापि भवेत्सद्यःप्रक्षालकोऽपि वा ॥

श्रौतं स्मार्तं च यत्किंचिद्विधानं धर्मसाधनम् ॥
गृहे तद्रक्षता कार्यमन्यथा दोषभाग्भवेत् ॥
एवं विप्रो गृहस्थस्तु शांतः शुक्लांबरः शुचिः ॥ १
प्रजापतेः परं स्थानं सम्प्राप्नोति न संशयः ॥ १९

इति वैष्णवे धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ३.

गृहस्थो ब्रह्मचारी वा वनवासं यदा चरेत् ॥
चीरवल्कलधारी स्यादकृष्टान्नाशनो मुनिः ॥ १ ॥
गत्वा च विजनं स्थानं पंचयज्ञान्न हापयेत् ॥
अग्निहोत्रं च जुहुयादन्नीवारकादिभिः ॥ २ ॥
श्रवणेनाग्निमाधाय ब्रह्मचारी वने स्थितः ॥
पंचयज्ञविधानेन यज्ञं कुर्यादतंद्रितः ॥ ३ ॥
संचितं तु यदारण्यं भक्तार्थं विधिवद्वने ॥
त्यजेदाश्वयुजे मासि वन्यमन्यत्समाहरेत् ॥ ४ ॥
आकाशशायी वर्षासु हेमंते च जलाशयः ॥
ग्रीष्मे पंचाग्निमध्यस्थो भवेन्नित्यं वने वसन् ॥ ५ ॥
कृच्छ्रं चांद्रायणं चैव तुलापुरुषमेव च ॥
अतिकृच्छ्रं प्रकुर्वीत त्यक्त्वा कामाञ्छुचिस्ततः ॥ ६
निर्द्वंद्वं ज्ञानमातिष्ठेत्सहिष्णुर्भूतजान्गुणान् ॥

पूजयेदतिथींश्चैव ब्रह्मचारी वनं गतः ॥ ७ ॥
प्रतिग्रहं न गृह्णीयात्परेषां किंचिदात्मवान् ॥
दाता चैव भवेन्नित्यं श्रद्दधानः प्रियंवदः ॥ ८ ॥
रात्रौ स्थण्डिलशायी स्यात्प्रपदैस्तु दिनं क्षिपेत् ॥
वीरासनेन तिष्ठेद्वा क्लेशमात्मन्यचिंतयन् ॥ ९ ॥
केशरोमनखश्मश्रून्न छिंद्यान्नापि कर्तयेत् ॥
त्यजञ्छरीरसौहार्दं वनवासरतः शुचिः ॥ १० ॥
चतुःप्रकारं भिद्यंते मुनयः शंसितव्रताः ॥
अनुष्ठानविशेषेण श्रेयांस्तेषां परः परः ॥ ११ ॥
वार्षिकं वन्यमाहारमाहृत्य विधिपूर्वकम् ॥
वनस्थधर्ममातिष्ठन्नयेत्कालं जितेंद्रियः ॥ १२ ॥
भूरिसंवार्षिकश्चायं वनस्थः सर्वकर्मकृत् ॥
आदेहपतनं तिष्ठेन्मृत्युं चैव न कांक्षति ॥ १३ ॥
षण्मासांस्तु ततश्चान्यः पंचयज्ञक्रियापरः ॥
काले चतुर्थे भुंजानो देहं त्यजति धर्मतः ॥ १४ ॥
त्रिंशद्दिनार्थमाहृत्य वन्यान्नानि शुचिव्रतः ॥
निर्वर्त्य सर्वकार्याणि स्याच्च षष्ठेऽन्नभोजनः ॥ १५ ॥
दिनार्थमन्नमादाय पंचयज्ञक्रियारतः ॥
सद्यःप्रक्षालको नाम चतुर्थः परिकीर्तितः ॥ १६ ॥
एवमेते हि वै मान्या मुनयः शंसितव्रताः ॥ १७ ॥

इति वैष्णवे धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४.

यथोत्तमानि स्थानानि प्राप्नुवंति दृढव्रताः ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ॥ १ ॥
विरक्तः सर्वकामेषु पारिव्राज्यं समाश्रयेत् ॥
आत्मन्यग्नीन्समारोप्य दत्त्वा चाभयदक्षिणाम् ॥ २
चतुर्थमाश्रमं गच्छेद्ब्राह्मणः प्रव्रजन्गृहात् ॥
आचार्येण समादिष्टं लिंगं यत्नात्समाश्रयेत् ॥ ३ ॥
शौचमाश्रमसम्बन्धं यतिधर्मांश्च शिक्षयेत् ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमफल्गुता ॥ ४ ॥
दयां च सर्वभूतेषु नित्यमेतद्यतिश्चरेत् ॥
ग्रामांते वृक्षमूले च नित्यकालनिकेतनः ॥ ५ ॥
पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संविशेत् ॥
वृद्धानामातुराणां च भीरूणां संगवर्जितः ॥ ६ ॥
ग्रामे वापि पुरे वापि वासो नैकत्र दुष्यति ॥
कौपीनाच्छादनं वासः कंथां शीतापहारिणीम् ॥ ७
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ॥
संभाषणं सह स्त्रीभिरालंभप्रेक्षणे तथा ॥ ८ ॥
नृत्यं गानं सभां सेवां परिवादांश्च वर्जयेत् ॥
वानप्रस्थगृहस्थाभ्यां प्रीतिं यत्नेन वर्जयेत् ॥ ९ ॥

